तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥ सूत्रं।

चतुर्थाध्यायस्य प्रथमपादे
नवमाधिकरणमारचयति।

ज्ञानिनः पापलेपोऽस्ति नास्ति वाऽनुपभोगतः? ।
'नाशाश्र' इति शास्त्रेषु घोषाल्लेपोऽस्य विद्यते ॥
अकर्त्रात्मधिया वस्तुमहिम्नैव न लिप्यते ।
अश्लेषनाशावप्युक्तावश्लेषोऽस्तु सार्थकः ॥ ९ ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
दशमाधिकरणमारचयति।

पुण्येन लिप्यते नो वा? लिप्यते, ऽस्य श्रुतत्वतः ।
न हि श्रौतेन पुण्येन श्रौतं ज्ञानं विरुध्यते ॥
अलेपो वस्तुसामर्थ्यात् समानः पुण्यपापयोः।
श्रुतं पुण्यं पापतया तरणञ्च समं श्रुतं ॥ १० ॥

अनारब्धकार्य्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
एकादशाधिकरणमारचयति।

आरब्धे नश्यतो नो वा? नश्यते इव नश्यतः।
उभयत्राप्यकर्तृत्वबोधो सदृशो खलु ॥
आदेहपातं संसारश्रुतेरनुभवादपि ।
इषुचक्रादिदृष्टान्तात् नैवारब्धे विनश्यतः ॥ ११ ॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्। १६। अतोऽन्यापि ह्येकेषामुभयोः। १७। सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
द्वादशाधिकरणमारचयति।

नश्येन्नोवाऽग्निहोत्रादि नित्यं कर्म? विनश्यति,।
यतोऽयं वस्तुमहिमा न क्वचित् प्रतिहन्यते॥
अनुपात्तफलांशस्य नाशोऽप्यन्यो न नश्यति।
विद्यायामुपयुक्तत्वाज्ज्ञाप्यश्लेषस्तु काम्यवत्॥ १२॥

यदेव विद्ययेति हि। १८। सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
त्रयोदशाधिकरणमारचयति।

किमङ्गोपास्तिसंयुक्तमेव विद्योपयोग्युत?।
केवलञ्च प्रशस्तत्वात् भेदात्त्वैत्रोपयुज्यते॥
'केवलं वीर्य्यवद्विद्यासंयुक्तं वीर्य्यवत्तरं'।
इति श्रुतेस्तारतम्यादुभयं ज्ञानसाधनं॥ १३॥

भोगेन त्वितरे क्षपयित्वा सम्पद्यते। १९। सूत्रम्।

इति चतुर्थाध्यायस्य प्रथमपादः। *।

---

चतुर्थाध्यायस्य प्रथमपादे
चतुर्दशाधिकरणमारचयति।

वस्तुजन्मप्रदारब्धयुक्तानां नाशमुताऽस्ति मुक्?।
विद्यालोपे क्षतं कर्म फलदं, तेन नास्ति मुक्॥

आरब्धं भोजयेदेव न तु विद्यां विलोपयेत् ।
सुप्तबुद्धवदद्वैतभानादवस्थ्यात् कुतो न मुक् ॥ १४ ॥

इति चतुर्थाध्यायस्य प्रथमपादः ॥ * ॥

---

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ अत एव च सर्वाण्यनु ॥ २ ॥ सूत्रं ।

चतुर्थाध्यायस्य द्वितीयपादे
प्रथमाधिकरणमारचयति ।

वागादीनां स्वरूपेण वृत्त्या वा मानसे लयः ।
श्रुतिर्वाङ्मनसीत्याह स्वरूपे विलयस्ततः ॥
न लीयतेऽनुपादाने कार्यं वृत्तिस्तु लीयते ।
वह्निवृत्तेर्जले शान्तेर्वाक्शब्दो वृत्तिलक्षकः ॥ १ ॥

तन्मनः प्राण उत्तरात् ॥ ३ ॥ सूत्रम् ।

चतुर्थाध्यायस्य द्वितीयपादे
द्वितीयाधिकरणमारचयति ।

मनः प्राणे स्वयं वृत्त्या वा लीयेत स्वयं ततः? ।
कारणान्नोदकद्वारा प्राणो हेतुर्मनः प्रति ॥
साक्षात् स्वहेतौ लीयेत कार्यं प्राणादिके न तु ।
गौणः प्राणादिको हेतुस्ततो वृत्तिलयो धियः ॥ २ ॥

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ भूतेषु तच्छ्रुतेः ॥ ५ ॥ नैकस्मिन् दर्शयतो हि ॥ ६ ॥ सूत्रम् ।

चतुर्थाध्यायस्य द्वितीयपादे
तृतीयाधिकरणमारचयति ।

प्राणो भूतेषु जीवे वा लयो ? भूतेषु, तच्छ्रुतेः ।
'स प्राणस्तेजसी'त्याह न तु जीव इति कश्चित् ॥
'एवमेवेममात्मानं प्राणा यन्ती'ति च श्रुतेः ।
जीवे लीत्वा सहैतेन पुनर्भूतेषु लीयते ॥ ३ ॥

समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य ॥ ७ ॥ सूत्रम् ।

चतुर्थाध्यायस्य द्वितीयपादे
चतुर्थाधिकरणमारचयति ।

ज्ञान्यज्ञोत्क्रान्तिरसमा समा वा ? नहि सा समा ।
मोक्षसंसाररूपस्य फलस्य विषमत्वतः ॥
आसृत्युपक्रमं जन्म वर्त्मागमनतः समा ।
पश्चात्तु फलवैषम्यादसमोत्क्रान्तिरेतयोः ॥ ४ ॥

तदापीतेः संसारव्यपदेशात् ॥ ८ ॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ नोपमर्देनातः ॥ १० ॥ अस्यैव चोपपत्तेरेष उष्मा ॥ ११ ॥ सूत्रं ।

चतुर्थाध्यायस्य द्वितीयपादे
पञ्चदशाधिकरणमारचयति ।

स्वरूपेणाथ वृत्त्या वा भूतानां विलयः परे ? ।
स्वरूपेण लयो युक्तः स्वोपादाने परात्मनि ॥
आत्मज्ञस्य तथात्वेऽपि वृत्त्यैवान्यस्य तत्क्षयः ।
न चेत् कस्यापि जीवस्य न स्याज्जन्मान्तरं क्वचित् ॥ ५ ॥

प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥ स्पष्टो ह्येकेषां ॥ १३ ॥ स्मर्यते च ॥ १४ ॥ सूत्रम् ।

चतुर्थाध्यायस्य द्वितीयपादे
षष्ठाधिकरणमारचयति ।

किं जीवादथवा देहात् प्राणोत्क्रान्तिर्निवार्यते ?।
जीवान्निवारणं युक्तं, जीवेद्देहोऽन्यथा सदा॥
तत्रास्मज्जलवद्देहे प्राणानां विलयः स्मृतः।
उच्छ्वयत्यच देहोऽतो देहात् सा विनिवार्यते॥ ६॥

तानि परे तथाह्याह॥ १५॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
सप्तमाधिकरणमारचयति।

अस्य वागादयः स्वस्वहेतौ लीनाः परेऽथवा ?।
'गताः कला' इति श्रुत्या स्वस्वहेतुषु तल्लयः॥
तच्छ्रिलयसाम्योक्तेर्विद्वद्दृष्ट्या लयः परे।
अन्यदृष्टिपरं शास्त्रं गता इत्याद्युदाहृतं॥ ७॥

अविभागो वचनात्॥ १६॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
अष्टमाधिकरणमारचयति।

तल्लयः शक्तिशेषेण निःशेषेणाथवाऽऽत्मनि ?।
शक्तिशेषेण युक्तोऽसावज्ञानिष्वेतदीक्षणात्॥
नामरूपविभेदोक्तेर्निःशेषेणैव संचयः।
अज्ञे जन्मान्तरार्थत्वं शक्तिशेषत्वमिष्यते॥ ८॥

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥ १७॥ सूत्रम्।

चतुर्थाध्यायस्य द्वितीयपादे
नवमाधिकरणमारचयति।

अविशेषो विशेषो वा स्यादुत्क्रान्तेरुपासितुः ।
अप्रदाहनमाम्नातेर्विशेषोऽस्ति निर्गमात् ॥
मूर्द्धन्यैव नाड्याऽसौ प्रशस्ताद्यैर्विवक्षणात् ।
विद्यासामर्थ्यतश्चापि विशेषोऽस्त्यन्यदर्शनात् ॥ ९ ॥

रश्म्यनुसारी (१८) निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च (१९) सूत्रम् ।

चतुर्थाध्यायस्य द्वितीयपादे
दशमाधिकरणमारचयति ।

अहन्येव मृतो रश्मिं याति निश्यपि वा निशि ।
सूर्यरश्म्यभावेन मृतोऽहन्येव याति तं ॥
यावद्देहं रश्मिनाड्योर्युक्तो योगस्तथापि ।
देहदाहात् श्रुतत्वाच्च रश्मीन्निश्यपि यात्यसौ ॥ १० ॥

अतश्चायनेऽपि दक्षिणे (२०) योगिनः प्रति च स्मर्यते स्मार्ते चैते (२१) सूत्रम् ।

इति चतुर्थाध्यायस्य द्वितीयपादे ॥ १० ॥

---

चतुर्थाध्यायस्य द्वितीयपादे
एकादशाधिकरणमारचयति

अयने दक्षिणे मृतो धीफलं नैत्यथैति वा ।
नैत्युत्तरायणश्लाघाकर्मिष्वस्यापि प्रतीक्षणात् ॥
आतिवाहिकदेवोक्तेरस्यास्ति प्रतीक्षणम् ।
फलैकान्त्याच्च विद्यायाः फलं प्राप्नोत्यसंशयम् ॥ ११ ॥

इति चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ सूत्रम्।
चतुर्थाध्यायस्य तृतीयपादे
प्रथमाधिकरणमारचयति।

नानाविधा ब्रह्मलोकमार्गा यद्वार्चिरादिकः ?।
नानाविधः स्याद्विद्यासु वर्णनादन्यथान्यथा ॥
एक एवार्चिरादिः स्यान्नानाश्रुत्युक्तपर्वकः।
यतः पञ्चाग्निविद्यायां विद्यान्तरगतं श्रुतः ॥ १ ॥

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ सूत्रम्।
चतुर्थाध्यायस्य तृतीयपादे
द्वितीयाधिकरणमारचयति।

सन्निवेशयितुं वायुश्चाशक्योऽथ शक्यते ?।
न शक्यो वायुलोकस्य श्रुतक्रमविवर्जनात् ॥
वायुश्चन्द्रादिनिष्क्रम्य स आदित्यं व्रजेदिति।
श्रुतेरर्वाग्रवेर्वायुर्देवलोकात्ततोऽथवा ॥ २ ॥

तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥ सूत्रम्।
चतुर्थाध्यायस्य तृतीयपादे
तृतीयाधिकरणमारचयति।

वरुणादेः सन्निवेशो नास्ति तत्राथ विद्यते ?।
नास्ति, वायोरिवैतस्य व्यवस्थाश्रुत्यभावतः ॥
विद्युत्सम्बन्धिवृष्टिस्थनीरस्याधिपतित्वतः।
वरुणो विद्युतस्तूर्द्ध्वं तत इन्द्रप्रजापती ॥ ३ ॥

आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥ उभयव्यामोहात् तत्सिद्धेः ॥ ५ ॥
वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥ सूत्रम्।

चतुर्थाध्यायस्य तृतीयपादे
चतुर्थाधिकरणमारचयति ।

मार्गचिह्नं भोगभूर्वा नेतारो वार्चिरादयः ? ।
आद्यौ स्यातां, मार्गचिह्नमाकर्ण्यालोकवच्छ्रुतः ।
'ब्रह्म गमयती'त्युक्तेर्नेतारस्तेषु चेदृशः ।
निर्देशोऽस्त्यत्र लोकाख्या तन्निवासिजनान् प्रति ॥ ४ ॥

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ विशेषितत्वाच्च ॥ ८ ॥ सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥ स्मृतेश्च ॥ ११ ॥ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥ दर्शनाच्च ॥ १३ ॥ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥ सूत्रम् ।

चतुर्थाध्यायस्य तृतीयपादे
पञ्चमाधिकरणमारचयति ।

परं ब्रह्माथ वा कार्यमुदङ्मार्गेण गम्यते ।
मुख्यत्वादमृतत्वोक्तेर्गम्यते परमेव तत् ॥
कार्यं स्यात्, गतियोग्यत्वात् परस्मिंस्तदसम्भवात् ।
सामीप्याद्ब्रह्मशब्दोक्तिरमृतत्वं क्रमाद्भवेत् ॥ ५ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च ॥ १५ ॥ विशेषञ्च दर्शयति ॥ १६ ॥ सूत्रम् ।

इति चतुर्थाध्यायस्य तृतीयः पादः ॥ ※ ॥

---

चतुर्थाध्यायस्य तृतीयपादे
षष्ठाधिकरणमारचयति ।

प्रतीकोपासकान् ब्रह्मलोकं नयति वा नवा ।
अविशेषश्रुतेरेतान् ब्रह्मोपासकवन्नयेत् ॥

ब्रह्मक्रतोरभावेन प्रतीकार्हफलश्रवात्।
न तान्नयति पञ्चाग्निविदो नयति तच्छ्रुतेः ॥ ६ ॥

इति चतुर्थाध्यायस्य तृतीयपादः ॥ * ॥

---

सम्पद्याविर्भावः स्वेनशब्दात् ॥ १ ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥ आत्मा प्रकरणात् ॥ ३ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
प्रथमाधिकरणमारचयति।

नाकवन्नूतनं मुक्तिरूपं यद्वा पुरातनं?।
अभिनिष्पत्तिवचनात् फलत्वादपि नूतनं ॥
'स्वेन रूपेणेति' वाक्ये स्वशब्दात्तत् पुरातनं।
आविर्भावोऽभिनिष्पत्तिः फलञ्चाज्ञाननाशितः ॥१॥

अविभागेन दृष्टत्वात् ॥ ४ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
द्वितीयाधिकरणमारचयति।

मुक्तरूपाद्ब्रह्म भिन्नमभिन्नं वाऽथ भिद्यते?।
'सम्पद्य ज्योतिरि'त्येवं कर्मकर्तृभिदोक्तितः ॥
अभिनिष्पन्नरूपस्य 'स उत्तमः पुमानिति'।
ब्रह्मत्वोक्तेरभिन्नं तद् भेदोक्तिरुपचारतः ॥ २ ॥

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
तृतीयाधिकरणमारचयति ।

क्रमेण युगपद्वाऽस्य सविशेषाविशेषकौ ? ।
विरुद्धत्वात् कालभेदाद्व्यवस्था श्रुतयोस्तयोः ॥
मुक्तामुक्तदृशोर्भेदाद्व्यवस्था सम्भवे सति ।
अविरुद्धं यौगपद्यमश्रुतं क्रमकल्पनं ॥ ३ ॥

सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ अत एव चानन्याधिपतिः ॥ ९ ॥
सूत्रम् ।

चतुर्थाध्यायस्य चतुर्थपादे
चतुर्थाधिकरणमारचयति ।

भोग्यसृष्टावस्ति बाह्यो हेतुः संकल्प एव वा ? ।
आरामोदकवैषम्याद्धेतुर्बाह्योऽस्ति लोकवत् ॥
'संकल्पादेव पितर' इति श्रुत्यावधारणात् ।
संकल्प एव हेतुः स्याद्वैषम्याद्यानुचिन्तनात् ॥ ४ ॥

अभावं बादरिराह ह्येवं ॥ १० ॥ भावं जैमिनिर्विकल्पामननात्
॥ ११ ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ तन्वभावे स-
न्ध्यवदुपपत्तेः ॥ १३ ॥ भावे जाग्रद्वत् ॥ १४ ॥ सूत्रम् ।

चतुर्थाध्यायस्य चतुर्थपादे
पञ्चमाधिकरणमारचयति ।

व्यवस्थितावैच्छिकौ वा भावाभावौ तनोर्यतः ? ।
विरुद्धौ तेन पुंभेदादुभौ स्यातां व्यवस्थितौ ॥
एकस्मिन्नपि पुंस्येतावैच्छिकौ कालभेदतः ।
अविरोधात् स्वप्नजाग्रद्भोगवद् युज्यते द्विधा ॥ ५ ॥

प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
षष्ठाधिकरणमारचयति।

निरात्मनोऽनेकदेहाः सात्मका वा ? निरात्मकाः।
अभेदादात्मनो मनेकस्मिन्नेव वर्त्तनात् ॥
एकस्मान्मनसोऽन्यानि मनांसि स्युः प्रदीपवत्।
आत्मभिस्तद्वच्छिन्नैः सात्मकाः स्युस्त्विधेत्यतः ॥ ६ ॥

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ विकारावर्त्ति च तथाहि स्थितिमाह ॥ १९ ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ सूत्रम्।

इति चतुर्थाध्यायस्य चतुर्थपादः ॥ ❋ ॥

चतुर्थाध्यायस्य चतुर्थपादे
सप्तमाधिकरणमारचयति।

जगत्स्रष्टृत्वमस्त्येषां योगिनामथ नास्ति वा ?।
'अस्ति स्वाराज्यमाप्नोति' त्यैश्वर्याभवग्रहात् ॥
सृष्टावप्रकृतत्वेन स्रष्टृता नास्ति योगिनां।
स्वाराज्यमीशो भोगाय ददे मुक्तिस्तु विद्यया ॥ ७ ॥

इति चतुर्थाध्यायस्य चतुर्थपादे ॥ ० ॥

चतुर्थाध्यायः समाप्तः।
समाप्तश्चायं ग्रन्थः।



## मुखबन्धश्लोकपञ्चाशिका।



राममोहनरायेण ख-वेद-मुनि-भू-मिते।
शाकेऽङ्कितमिदं ब्रह्मसूत्रं भाष्यसमन्वितम् ॥ १ ॥
ततः कालवशात्तस्य प्रचारे विरले सति।
ढाकाविश्वाङ्गरेण मनो दध्रे तदङ्कने ॥ २ ॥
दृष्टं तट्टीकया हीनं प्रायशोऽस्फुटमित्यतः।
सुबोधाय च तेनेदं सटीकस्यास्य मुद्रणम् ॥ ३ ॥
ततः का नाम विख्याताऽद्वैतपक्षोपयोगिनी।
टीकाऽऽस्तेऽस्येति जिज्ञासा जाता तद्धृदि भूयसी ॥ ४ ॥
तदेकेति श्रुतं तेन भाष्यरत्नप्रभाख्यया।
वाराणसीसम्प्रदायादृताऽऽस्तेऽतीव विश्रुता ॥ ५ ॥
विशेषतस्तैर्भाष्यस्य व्याख्याद्वयसमेतया।
टीकया पठ्यतेऽध्यायद्वयं च शिष्टमन्यया ॥ ६ ॥
सा तु टीकाऽऽनन्दगिरिप्रणीता शेवमीठवा।
शारीरकन्यायनिर्णयाख्यया विश्वविश्रुता ॥ ७ ॥
ततस्तयोः का मुद्रार्हा भवेदिति समुत्सुकः।
शेषोक्ता सोऽशृणोत् टीकाऽन्यैवेत्यङ्क्ष्यते ध्रुवम् ॥ ८ ॥
भाष्यरत्नप्रभां तेनाङ्कितुं स कृतनिश्चयः।
प्रस्तावमकरोद्वत्यासियाटिकसंसदि ॥ ९ ॥

आसादिताश्चः खीष्टाब्दे अतीषुनगभूमिमे।
तस्याः प्रारभतेमं च स ग्रन्थं मुद्रयाऽङ्कितुं॥ १० ॥
अस्य षोड़शपादस्य ग्रन्थस्य पादयुग्मके।
मुद्रितेऽसुस्थदेहोऽसौ स्वदेशमगमत्तदा॥ ११ ॥
गते तु तस्मिंस्तत् कार्यं स्थितमेव हि तद्दशम्।
स्वसाधनमपेक्ष्यैव तद्धस्तेन हितार्थिना॥ १२ ॥
सार्धात् संवत्सरादूर्द्धं स्वदेशात् स पराऽऽगतः।
किन्तु कार्यवशादत्रावस्थातुं प्रबभूव न॥ १३ ॥
वङ्गदक्षिणपाश्चात्यभागावस्थानतः श्रमः।
प्रारब्धं साधितुं केनाप्युपायेन न चाभवत्॥ १४ ॥
एवं कतिषु वर्षेषु व्यतीतेषु विशागतः।
स लब्धवृत्तिरभवत् स्वदेशगमनोद्यतः॥ १५ ॥
तदोक्तसंसदारूढं साध्यक्षं सभ्यमण्डलम्।
स मामन्ववृणत् तस्मिन् नियोजयितुमञ्जसे॥ १६ ॥
तस्मादध्यापकोऽध्यक्षः श्रीमान् कावेल ईदृशीं।
धुरं समर्पयामास मद्धस्ते तस्य कर्म्मणः॥ १७ ॥
मया तदनुसारेण यतिनैतत् समाहितम्।
न कृता त्रुटिरेतस्मिन् यथामतिकृतोहितम्॥ १८ ॥
पाठभेदप्रकाशाय मयैतच्छोधनाय च।
पश्चाद्दत्तानि पुस्तानि तेषां प्रत्येकमङ्कितम्॥ १९ ॥
स-लक्ष्मलक्षिता पुस्ती प्रथमा मुद्रिता हि सा।
वर्ध चिह्नाङ्किता पुस्ता द्वितीया लिखिता मता॥ २० ॥

वर्धमानेश्वरस्थभास्वरिका सा सुरक्षिता ।
न्यायरत्नोपाधिना श्रीपद्मलोचनशर्मणा ॥ २१ ॥
का-ऽस्याङ्किता तृतीया च लिखिता सोत्थधामतः ।
श्रीवाणेश्वरविद्यालङ्कारेणाभीतरक्षिता ॥ २२ ॥
सा-चिङ्कचिङ्किता सोमाहटीपुस्तकालयस्थिता ।
चित्रप्र्याकारतो हस्तलिखिता तुर्यपुस्तिका ॥ २३ ॥
एषा तु टीकया युक्ता भाष्यरत्नप्रभाख्यया ।
टीकामात्रा पञ्चमी च प्राकृचिङ्का समागता ॥ २४ ॥
एता वङ्गाक्षरैः सर्वाः केवलां पञ्चमीं विना ।
नागराक्षरसम्बद्धां पवित्रां लिखिता बुधैः ॥ २५ ॥
एतेषां पुस्तकानान्तु पञ्चानां तुर्यपुस्तकम् ।
एतन्मुद्रणकार्यार्थमादर्शत्वे कृतं मया ॥ २६ ॥
मुद्रायन्त्रस्थटद्यात् प्रूफपत्रमङ्कितमागतम् ।
आदिपञ्चमपुस्ताभ्यामादौ शोधितमञ्जसा ॥ २७ ॥
ततस्तन्मुद्रितायातं संशोधनपुरःसरम् ।
द्वितीयेन तृतीयेन पुस्तेनापि च संस्कृतम् ॥ २८ ॥
ततः पाठान्तरयुतं संशोधनमपश्चिमम् ।
सीतानेकसमासोक्तं मुद्रणार्थे स्वीकृतम् ॥ २९ ॥
विचारासङ्गतं पाठान्तरं निम्ने निवेशितम् ।
तत्तत्पुस्तकबोधार्थसङ्केताक्षरलाञ्छितम् ॥ ३० ॥
भाष्यरत्नप्रभा रम्या वस्तुतो नात्र संशयः ।
कष्टमत्र त्विदं भग्नश्लोकपादा तृतीयके ॥ ३१ ॥

सोपाद्रटीकितं पुस्तीदयमेवावलम्बितम्।
अथ्या मुद्रामसाधानत्वं तत्पादवर्जितम्॥ ३२॥
मत्रोद्यम रोगेण श्रीमताऽप्यवलम्बितम्।
तदेवं पुस्तकद्वन्द्वमेतत्कार्यप्रवर्त्तिना॥ ३३॥
प्रकृतार्थोपयोगित्वात् कामिनी भामिनीव सा।
यद्यङ्गीकृताऽस्मास्वदभविष्यत् परं सुखम्॥ ३४॥
इमामधीनसर्वाङ्गीमन्दृष्टा कर्तुमुद्यमाः।
विफलत्वं गता मेऽद्य न दूयेऽत्र मनागपि॥ ३५॥
अस्तीति सर्वविदितं विश्वसृष्टिकौशलम्।
सर्वाङ्गसुन्दरं वस्तु सृष्टं नापि सुरक्ष्यते॥ ३६॥
तत्पादभाष्यसंक्षिप्तटिप्पनीमाषदितमुना।
मया विज्ञापितः श्रीमानिति कार्वेलकोविदः॥ ३७॥
विस्तरीक्रियतामेव पादेऽगत्याऽन्यटीकया।
साकल्येन समादिष्टं तदा तेनेति मां प्रति॥ ३८॥
अतो मयाऽऽनन्दगिरेष्टीका तत्र निवेशिता।
सा तत्त्वबोधिनीपुस्त्यालयस्याऽऽदर्शरूपिणी॥ ३९॥
एतद्ग्रन्थस्य सूत्रांशप्रणेता बादरायणः।
सूत्राण्यस्मिन् पञ्चशतं पञ्चपञ्चाशदुत्तरम्॥ ४०॥
भाष्यभागो भगवता प्रणीतः शङ्करेण तु।
भाष्यरत्नप्रभाकारी गोविन्दानन्दपण्डितः॥ ४१॥
समयस्य चोषि नामानि सूत्राम्नानि यथाक्रमम्।
सङ्घवेदाम्नाभारीरकादीनि कल्पितानि च॥ ४२॥

तथैव मीमांसाशास्त्राणि चोपन्यासान्यथाक्रमम् ।
पूर्वपक्षसदादीनि नामानि कल्पितानि च ॥ ४३ ॥
तथा व्यवहृते चान्ये वर्त्तेते नामनी शुभे ।
एकं ब्रह्मविचाराख्यं न्यायाधिकरणं परम् ॥ ४४ ॥
न्यायमालान्तरैस्त्वाधिकरणैः स-भ-भूमितैः ।
वेदान्तवाक्यतात्पर्यग्रन्थोऽयं भागमागतः ॥ ४५ ॥
अस्याधिकरणव्यूहस्यार्थसंग्रहरूपिणी ।
कस्यचिद्भारतीतीर्थाभिधस्यास्ते यतेः कृतिः ॥ ४६ ॥
सा तत्त्वबोधिनीयन्त्रे सटीकाऽनूदिताऽङ्किता ।
आनन्दचन्द्रवेदान्तवागीशेन च संस्कृता ॥ ४७ ॥
साऽप्येतत्सूत्रभाष्यीयनिखिलार्थोपयोगिनी ।
यत्नतो दर्शनीयेतीतः परं सममुच्यत ॥ ४८ ॥
सा त्वत्र गौरवभिया मूलमात्रैव मुद्रिता ।
तद्व्याख्यानक्रमणिकाटीकानां दशकं विना ॥ ४९ ॥
मूलटीकार्थसन्देहसन्दोहोद्घाटकुञ्चिका ।
विवृतिर्दर्शनीया चेत्, का चिन्ता, सा न दुर्लभा ॥ ५० ॥

फोर्ट उइलियम् कालेज ॥
शकाब्दे १७८५ ।

श्रीरामनारायण शर्म्मणः ।

# ब्रह्मसूत्रीयषोडशपादार्थदर्शनं

## निर्घण्टपत्रम् ।


| प्रतिपाद्यविषयाः । | अध्यायाङ्काः । | पादाङ्काः । |
|---|---|---|
| मुख्यब्रह्मबोधकश्रुतिवाक्यानां समन्वयः, .. .. | १ | १ |
| उपास्यब्रह्मवाचकास्पष्टश्रुतिवाक्यानां समन्वयः, .. | १ | २ |
| ज्ञेयब्रह्मप्रतिपादकास्पष्टश्रुतिवाक्यानां समन्वयः, .. | १ | ३ |
| अव्यक्तादिसन्दिग्धपदमात्राणामेव समन्वयः, .. .. | १ | ४ |
| साङ्ख्ययोगकाणादादिस्मृतिभिः साङ्ख्यादिप्रयुक्ततर्कैश्च वेदान्तसमन्वयस्य विरोधपरिहारः, .. .. .. | २ | १ |
| साङ्ख्यादिमतानां दुष्टत्वप्रदर्शनं, .. .. .. .. | २ | २ |
| पूर्वभागेन पञ्चमहाभूतश्रुतीनां, उत्तरभागेन च जीवश्रुतीनां परस्परविरोधपरिहारः, .. .. .. | २ | ३ |
| लिङ्गशरीरश्रुतीनां विरोधपरिहारः, .. .. .. | २ | ४ |
| जीवस्य परलोकगमनागमनविचारपूर्वकवैराग्यनिरूपणं, .. .. .. .. .. .. .. .. .. | ३ | १ |
| पूर्वभागेन त्वं-पदार्थस्य उत्तरभागेन च तत्-पदार्थस्य च शोधनं, .. .. .. .. .. .. | ३ | २ |

| प्रतिपाद्यविषयाः | अध्यायाङ्कः | पादाङ्कः |
|---|---|---|
| सगुणविद्यासु गुणोपसंहारस्य, निर्गुणे ब्रह्मणि अपुनरुक्तपदोपसंहारस्य च निरूपणम्, .. .. | ३ | ३ |
| निर्गुणज्ञानस्य बहिरङ्गसाधनभूतानां आश्रमयज्ञादीनां, अन्तरङ्गसाधनभूतानां च शमदमश्रवणमननादीनां निरूपणं, .. .. .. .. | ३ | ४ |
| श्रवणाद्यावृत्त्या निर्गुणं, उपासनया सगुणं वा ब्रह्म साक्षात्कृतवतो जीवतः पुण्यपापलेपविनाशलक्षणाया मुक्तेरभिधानं, .. .. .. | ४ | १ |
| म्रियमाणस्य उत्क्रान्तिप्रकारदर्शनं, .. .. .. | ४ | २ |
| सगुणब्रह्मविदो मृतस्योत्तरमार्गाभिगमनं .. .. | ४ | ३ |
| पूर्वभागेन निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तेः, उत्तरभागेन च सगुणब्रह्मविदो ब्रह्मलोकस्थिते-निरूपणं,.. .. .. .. .. .. .. | ४ | ४ |

# व्यासाधिकरणार्थदर्शनं निघण्टपत्रम्।

## समन्वयाख्यप्रथमाध्यायस्य प्रथमपादे।


| प्रतिपाद्यविषयाः। | सूत्राङ्काः। | अधिकरणाङ्काः। |
|---|---|---|
| ब्रह्मणो विचार्यत्वं, .. .. .. .. | १ | १ |
| ब्रह्मणो लक्ष्यत्वं, .. .. .. .. .. | २ | २ |
| ब्रह्मणो वेदकर्तृत्वं, १ वर्णकं,<br>ब्रह्मणो वेदकमेयता, २ वर्णकं, .. .. | ३ | ३ |
| वेदान्तानां ब्रह्मबोधकत्वं, १ वर्णकं,<br>वेदान्तानां ब्रह्मण्यवसितत्वं, २ वर्णकं, .. | ४ | ४ |
| प्रधानस्य जगत्कर्तृत्वाभावकथनं, .. .. | ५-११ | ५ |
| आनन्दमयकोषस्य परमात्मत्वं, १ वर्णकं,<br>ब्रह्मण आनन्दमयजीवाधारत्वं, २ वर्णकं, | १२-१९ | ६ |
| आदित्यान्तर्गतहिरण्मयपुरुषस्येश्वरत्वं, | २०-२१ | ७ |
| परब्रह्मण आकाशशब्दवाच्यत्वं, .. .. | २२ | ८ |
| ब्रह्मण आकाशशब्दवत् प्राणशब्दवाच्यत्वं, .. | २३ | ९ |
| परब्रह्मणो ज्योतिःशब्दवाच्यत्वं, .. .. | २४-२७ | १० |
| ब्रह्मणः प्राणशब्दप्रतिपाद्यत्वं, .. .. | २८-३१ | ११ |


## उक्ताध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| ब्रह्मण उपास्यत्वं, .. .. .. .. | १-८ | १ |
| ब्रह्मणो जगत्कर्तृत्वं, .. .. .. .. | ९-१० | २ |
| चेतनयोर्जीवेश्वरयोर्हृद्गुहागतत्वं, .. .. | ११-१२ | ३ |

| प्रतिपाद्यविषयाः। | सूत्र० | अधि० |
|---|---|---|
| छायाजीवान्यदेवान्* भित्त्वा परब्रह्मण एवोपास्यत्वं, .. .. .. .. | १३-१७ | ४ |
| प्रधानजीवेतरस्येश्वरस्यैवान्तर्यामिशब्दवाच्यत्वं, | १८-२० | ५ |
| प्रधानजीवौ निराकृत्येश्वरस्य भूतयोनित्वं, | २१-२३ | ६ |
| ब्रह्मणो वैश्वानरशब्दवाच्यत्वं, .. .. | २४-३२ | ७ |

## उक्ताध्यायस्य तृतीयपादे।

| | | |
|---|---|---|
| सूत्रात्महिरण्यगर्भप्रधानभोक्तृजीवेश्वराणां मध्ये केवलमीश्वरस्यैव सर्वाधिष्ठानभूतत्वं, .. .. .. | १-७ | १ |
| प्राणपरेशयोर्मध्ये परेशस्यैव सत्यशब्देन श्रेष्ठत्वं, .. | ८-९ | २ |
| प्रणवब्रह्मणोर्मध्ये ब्रह्मण एवाक्षरशब्दवाच्यत्वं, .. .. | १०-१२ | ३ |
| अपर-परब्रह्मणोर्मध्ये परब्रह्मण एवाभिमानेन प्रणवेन ध्येयत्वं, .. .. .. .. .. .. .. | १३ | ४ |
| दहराकाशत्वेन प्रतीयमानानां वियज्जीवब्रह्मणां मध्ये ब्रह्मण एव तदाकाशवाच्यत्वं, .. .. .. .. | १४-१८ | ५ |
| अल्पपुरुषत्वेनापाततः प्रतीयमानयोर्जीवपरेशयोः परेशस्यैव तत्पदवाच्यत्वं,.. .. .. .. .. | १९-२१ | ६ |
| अनन्यकाशत्वेनोपलब्धयोः सूर्यादितेजःपदार्थचैतन्ययोः चैतन्यस्यैव तत्प्रकाशत्वं, .. .. .. .. .. | २२-२३ | ७ |
| जीवात्मपरमात्मनोर्मध्ये परमात्मन एवाङ्गुष्ठमात्रपुरुषशब्देन प्रतिपादनं, .. .. .. .. .. | २४-२५ | ८ |
| देवानां निर्गुणविद्यायामधिकारनिरूपणं, .. .. | २६-३३ | ९ |
| शूद्राणां वेदानधिकारकथनपूर्वकः शोकाकुलत्वेन शूद्रनामभाग्धारिणो जानश्रुतेर्वेदविद्याधिगमः, | ३४-३८ | १० |

| प्रतिपाद्यविषयाः । | सूत्र॰ | अधि॰ |
|---|---|---|
| प्राणत्वेनाम्नातानां वक्त्रवायुपरेशानां मध्ये परेशस्यैव तादृशप्राणशब्दवाच्यत्वं, .. .. .. .. .. | ३९ | ११ |
| ब्रह्मणः परत्वज्योतिष्ट्वं, .. .. .. .. .. | ४० | १२ |
| ब्रह्मण आकाशशब्दवाच्यत्वं, .. .. .. .. | ४१ | १३ |
| ब्रह्मणो विज्ञानमयशब्दवाच्यत्वं, .. .. .. | ४२-४३ | १४ |


## उक्ताध्यायस्य चतुर्थपादे ।


| | | |
|---|---|---|
| कारणावस्थापन्नस्य स्थूलशरीरस्यैवाव्यक्तशब्दवाच्यत्वं, | १-७ | १ |
| श्रुतिप्रमितप्रकृति-स्मृतिसम्मतप्रधानयोर्मध्ये तादृशप्रकृतेरेवाजाशब्दवाच्यत्वं, .. .. .. .. | ८-१० | २ |
| प्राणचक्षुःश्रोत्रमनोऽन्नानां पञ्चपञ्चजनशब्दवाच्यत्वं, | ११-१३ | ३ |
| ब्रह्मप्रतिपादकवेदान्तवाक्यसमन्वयानां युक्तियुक्तत्वं, | १४-१५ | ४ |
| प्राणजीवपरात्मनां मध्ये परात्मन एव जगत्कर्तृत्वेन बालाकिना ब्रह्मत्वेनोक्तानां षोडशपुरुषाणां कर्तृत्वनिराकरणं, .. .. .. .. .. .. | १६-१८ | ५ |
| संशयितजीवपरमात्मनोर्मध्ये परमात्मन एव श्रवणमननादिविषयीकर्तृत्वं, .. .. .. .. .. | १९-२२ | ६ |
| ब्रह्मणो निमित्तोपादानोभयकारणत्वं, .. .. .., | २३-२७ | ७ |
| परमाणुशून्यादीनां श्रुत्युक्तानामपि जगत्कारणत्वमपहाय ब्रह्मण एव प्रतिनियतजगत्कारणत्वं, .. | २८ | ८ |


इति प्रथमाध्यायस्य समाप्तं ॥०॥

## अविरोधाख्यद्वितीयाध्यायस्य प्रथमपादे।


| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| साङ्ख्यस्मृत्या वेदसङ्कोचस्यायुक्तत्वं, .. .. .. .. | १-२ | १ |
| योगस्मृत्याऽपि वेदसङ्कोचस्यायुक्तत्वं, .. .. .. | ३ | २ |
| वैलक्षण्याद्यन्ययुक्तिद्वाराऽपि वेदान्तवाक्यानामबाध्यत्वं, | ४-११ | ३ |
| काणादबौद्धादीनां स्मृतियुक्तिभ्यामपि वेदवाक्यानामबाध्यत्वं, .. .. .. .. .. .. .. | १२ | ४ |
| भोक्तृभोग्यभेदवत्त्वेऽपि परब्रह्मणोऽद्वैतत्वस्याबाधात्वं, | १३ | ५ |
| ब्रह्मणि भेदाभेदयोर्व्यावहारिकत्वमद्वितीयत्वस्य च तात्त्विकत्वं, .. .. .. .. .. .. .. .. | १४-२० | ६ |
| सर्वज्ञत्वेन जीवसंसारमिथ्यात्वं स्वनिर्लेपत्वं च पश्यतः परमेश्वरस्य न हिताहितभाग्दोषः, .. .. .. | २१-२३ | ७ |
| अद्वितीयस्यापि ब्रह्मणः क्रमेण नानाकार्याणां सृष्टिसम्भावना, .. .. .. .. .. .. .. | २४-२५ | ८ |
| ईश्वरस्योपादानरूपपरिणामिकारणत्वव्यवस्थापनं, .. | २६-२९ | ९ |
| ईश्वरस्याशरीरित्वेऽपि मायावित्वं, .. .. .. | ३०-३१ | १० |
| नित्यतृप्तस्येश्वरस्यापि प्रयोजनं विनाऽशेषजगदुत्पादनं, | ३२-३३ | ११ |
| कर्मनियन्त्रितानां जीवानां सुखदुःखनिमित्तमात्रस्य जगत् संहरतश्च नैर्घृण्यदोषाभावः, .. .. | ३४-३६ | १२ |
| निर्गुणस्यापि ब्रह्मणो विवर्तरूपेण प्रकृतित्वसिद्धिः, .. | ३७ | १३ |


## उक्ताध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| साङ्ख्यानुमतप्रधानस्य जगद्धेतुत्वखण्डनं,.. .. .. | १-१० | १ |
| असद्वादोद्भवे काणाददृष्टान्तस्यायुक्तत्वं, .. .. | ११ | २ |
| परमाणूनां संयोगेन जगदुत्पत्तेर्युक्तिविरुद्धत्वं, .. | १२-१७ | ३ |

| प्रतिपाद्यविषयाः। | सू॰ | अधि॰ |
|---|---|---|
| ईश्वराद्भिन्नानां बाह्यवस्तुसत्त्ववादिबौद्धविशेषसम्मतानां परमाणूनां शब्दस्पर्शादीनाञ्च जगदुत्पादकत्वमतखण्डनं, .. .. .. .. .. .. .. .. .. | १८-२७ | ४ |
| विज्ञानवादिबौद्धसम्मतविज्ञानस्य जगत्कर्तृत्वादिखण्डनं, .. .. .. .. .. .. .. .. | २८-३२ | ५ |
| जीवादिसप्तपदार्थवादिनां बौद्धान्तराणां मतखण्डनं, | ३३-३६ | ६ |
| तटस्थेश्वरवादस्यायुक्तत्वं, .. .. .. .. .. .. .. | ३७-४१ | ७ |
| जीवोत्पत्त्यादेरयुक्तत्वं, .. .. .. .. .. .. .. | ४२-४५ | ८ |


## उक्ताध्यायस्य तृतीयपादे ।


| | | |
|---|---|---|
| वेदान्तवादिमते आकाशस्यानित्यत्वकथनं, .. .. | १-७ | १ |
| स्वरूपवतो ब्रह्मणो वायोरुत्पत्तिकथनं, .. .. .. .. | ८ | २ |
| सद्रूपस्य ब्रह्मणोऽजन्यत्वं जगज्जनकत्वञ्च, .. .. | ९ | ३ |
| कार्यकारणयोरभेदेन वायुभूतस्य ब्रह्मणस्तेजःसृष्टिः, | १० | ४ |
| वेदोक्ततेजोरूपब्रह्मणो जलोत्पत्तिसिद्धिः, .. .. | ११ | ५ |
| छान्दोग्योपनिषदुक्तजलोत्पन्नान्नस्य पृथिव्यर्थकत्वं, .. | १२ | ६ |
| पूर्वपूर्वकार्योपाधिकाद्ब्रह्मण उत्तरोत्तरकार्योत्पत्तिसिद्धिः, .. .. .. .. .. .. .. .. .. | १३ | ७ |
| लयकाले पृथिव्यादीनां विपरीतक्रमकल्पनं .. .. | १४ | ८ |
| प्राणादीनां भूतेष्वन्तर्भावान्न तेषां सृष्टिक्रमभङ्गः, .. | १५ | ९ |
| वपुषो जन्ममरणयोर्मुख्यत्वेन जीवस्य तयोर्भाक्तत्वं, .. | १६ | १० |
| जीवजन्मन औपाधिकत्वेन तस्य वस्तुतो नित्यत्वं, .. | १७ | ११ |
| जीवस्याचिद्रूपत्वखण्डनपूर्विका चिद्रूपत्वसिद्धिः, .. | १८ | १२ |
| जीवस्याणुत्वखण्डनपूर्वकं तस्य सर्वगतत्वप्रतिपादनं, .. | १९-३२ | १३ |

| प्रतिपाद्यविषयाः। | सू०। | अधि० |
|---|---|---|
| जीवस्याकर्तृत्वनिरसनपूर्वकं तत्कर्तृत्वप्रतिपादनं, .. | ३३-३९ | १४ |
| जीवकर्तृत्वस्याध्यस्तत्वेनावास्तविकत्वं, .. .. .. | ४० | १५ |
| जीवस्येश्वरप्रेरकत्वेन न रागप्रवृत्तत्वं, .. .. .. | ४१-४२ | १६ |
| औपाधिकबन्धनैर्जीवविशेषैर्जीवानाञ्च परस्परं व्यवहारव्यवस्था, .. .. .. .. .. .. | ४३-५३ | १७ |


---

## उक्ताध्यायस्य चतुर्थपादे।


| | | |
|---|---|---|
| इन्द्रियाणामनादित्वनिराकरणपूर्वकं तेषामात्मसमुत्पन्नत्वं, .. .. .. .. .. .. .. .. | १-४ | १ |
| इन्द्रियाणामेकादशसङ्ख्याकत्वस्य वेदान्तसम्मतत्वं, .. | ५-६ | २ |
| साङ्ख्यसम्मतेन्द्रियसर्वगतत्वनिराकरणपूर्वकं तेषां परिच्छिन्नत्वकथनं, .. .. .. .. .. .. .. | ७ | ३ |
| प्राणस्यानादित्वखण्डनपूर्वकं तदुत्पत्तिसमाधानं, .. | ८ | ४ |
| प्राणवायोः स्वतन्त्रताकथनं, .. .. .. .. .. | ९-१२ | ५ |
| प्राणस्य समष्टिरूपेणाधिदैविकी विभुता आध्यात्मिकी तु तस्याल्पताऽदृश्यता चेन्द्रियवदिति, .. .. | १३ | ६ |
| इन्द्रियगणस्य देवताविशेषाधीनत्वकथनं, .. .. | १४-१६ | ७ |
| विलक्षणत्वेन प्राणादिन्द्रियाणां पृथक्त्वं, .. .. | १७-१९ | ८ |
| सर्वजगत्सर्जने जीवस्याशक्तत्वादीशस्यैव सर्वशक्तिमत्त्वात् तस्यैव तन्निर्मातृत्वं, .. .. .. .. .. .. | २०-२२ | ९ |


इति द्वितीयाध्यायस्य समाप्तं ॥ ☀ ॥

## साधनाख्यतृतीयाध्यायस्य प्रथमपादे।


| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| जीवस्य भाविशरीरबीजभूतसूक्ष्मभूतवेष्टितस्यैव गमनं .. .. .. .. .. .. .. | १-७ | १ |
| कर्मान्तरैः सानुशयस्य जीवस्य लोकान्तरारोहणं, .. | ८-११ | २ |
| पापिनां याम्यलोकगमनं, .. .. .. .. .. | १२-२१ | ३ |
| अवरोहिणो जीवस्य वियदादिसमानत्वं, .. .. | २२ | ४ |
| स्वर्गादवतरणकाले व्योम-वृष्टि-पृथिवी-पुरुष-योषित्सु क्रमशो गमिष्यतो जीवस्य व्योम्नि वृष्टौ च जन्मनि त्वरा, तदितरेषु च जन्मनि विलम्ब इति, .. | २३ | ५ |
| व्रीह्यादौ जीवस्य न मुख्यजन्म किन्तु संश्लेषमात्रमिति, | २४-२७ | ६ |


## उक्ताध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| स्वप्नदृष्टेर्मिथ्यात्वकथनं .. .. .. .. .. | १-६ | १ |
| सुषुप्तिस्थानरूपस्य परस्य ब्रह्मण एकत्वख्यापनं, .. .. | ७-८ | २ |
| सुप्तावस्थितस्यैव जीवस्य तस्मात्समुत्थानं नापरस्येति, | ९ | ३ |
| मूर्च्छाया आपदाद्यवस्थान्तराभिन्नत्वं, .. .. .. | १० | ४ |
| ब्रह्मणो नीरूपभावस्य वेदान्तसम्मतत्वं,.. .. .. | ११-२१ | ५ |
| ब्रह्मणो निर्धारितत्वेन सत्यत्वख्यापनं, .. .. .. | २२-३० | ६ |
| ब्रह्मणोऽन्यस्यावस्तुत्वख्यापनं, .. .. .. .. | ३१-३७ | ७ |
| कर्मफलोत्पत्तिं प्रति ईश्वरस्यैव कर्तृत्वं नापूर्वस्येति, .. | ३८-४१ | ८ |

## उक्ताध्यायस्य तृतीयपादे ।


| प्रतिपाद्यविषयाः । | सू० | अधि० |
|---|---|---|
| छान्दोग्यबृहदारण्यकश्रुत्योः पञ्चाग्निविद्योपासनयोः विध्यनुष्ठानफलसाम्येनैकत्वं, .. .. .. .. | १-४ | १ |
| गुणोपसंहारस्य कर्तव्यत्वं, .. .. .. ... .. | ५ | २ |
| छान्दोग्यवाजसनेयिनोरुद्गीथविद्याभेदकथनं, .. | ६-८ | ३ |
| प्रणवोद्देशेनोङ्कारोद्गीथयोरैकत्वसम्पादनं,.. .. | ९ | ४ |
| वशिष्ठत्वादिगुणानामुपसंहर्तव्यत्वं, .. .. .. | १० | ५ |
| आनन्दरूपत्वादीनां ब्रह्मगुणानां प्रतिपत्तिफलत्वेन सर्वशाखासु समानत्वात् व्यवस्थापकविध्यभावाच्च तेषामुपसंहर्तव्यत्वं, .. .. .. ... .. | ११-१३ | ६ |
| पुरुषज्ञानस्य संसारकारणात्, ज्ञाननिवर्तकत्वात् पुरुषस्यैव वेद्यत्वं, .. .. .. .. .. .. | १४-१५ | ७ |
| ईश्वरस्यैवात्मशब्दवाच्यत्वं न विराज इति, .. .. | १६-१७ | ८ |
| काण्वछान्दोग्यषष्ठयोर्द्वयोर्वाक्यैकत्वं, .. .. .. | १८ | ९ |
| प्राणोपासनं प्रति प्राणविद्याप्राप्तयोरनग्नताबुद्ध्याचमनयोः अनग्नताबुद्धेरेव विधेयत्वं, .. .. .. | १९ | [illegible] |
| काण्वानामग्निरहस्यब्राह्मणबृहदारण्यकयोः पठितायाः शाण्डिल्यविद्याया एकविधात्वं, .. .. .. | २०-२२ | ११ |
| अहरित्यादित्यगतस्याहमित्यक्षिगतस्य च वेद्यपुरुषस्यैकत्वेऽपि स्थानविशेषे तन्नामविशेषस्य युक्तत्वं, .. | २३ | १२ |
| विधिकत्वाभावात् सम्भृत्यादीनां गुणानां शाण्डिल्यविद्यादिषु अनुपसंहार्यत्वं .. .. .. .. | २४ | १३ |
| तैत्तिरीयकताण्डिनोः पुरुषविद्यायाः पृथक्त्वं.. .. | २५ | १४ |
| वेदमन्त्रप्रवर्ग्यादीनां विद्यानङ्गत्वं,.. .. .. .. | २६ | १५ |

| प्रतिपाद्यविषयाः | सू० | पृ० |
|---|---|---|
| अर्थवादत्वेन पापपुण्ययोरुपायनस्य हानावुपसंहर्त्तव्यत्वं, — १ वर्णकं; पापपुण्यविधूननस्य हानार्थकत्वमेव न चालनार्थकत्वं, .. — २ वर्णकं; मरणात् प्राक् उपास्ते साधनानुष्ठाने सुकृतदुष्कृतक्षयः, .. .. — ३ वर्णकं .. | २६-२८ | १६ |
| उपासकस्यैवार्चिरादिमार्गो न ज्ञानिन इत्यस्य व्यवस्था, | २९-३० | १७ |
| सर्वासूपासनासु उत्तरमार्गविधानं, .. .. .. | ३१ | १८ |
| ब्रह्मतत्त्वज्ञानिनां मुक्तिर्नियता न तु प्राप्तिकीत्यस्य प्रतिपादनम्, .. .. .. .. .. .. .. | ३२ | १८ |
| आत्मस्वरूपलक्षणानां निषेधानां परस्परोपसंहर्त्तव्यत्वम्, .. .. .. .. .. .. .. | ३३ | २० |
| ऋतं पिबन्ताविति द्वा सुपर्णाविति च मन्त्रयोर्वेद्यैकत्वम्, .. .. .. .. .. .. .. | ३४ | २१ |
| एकशाखास्थयोः उषस्तकहोलयोर्ब्राह्मणयोर्विद्यैक्यप्रतिपादनम्, .. .. .. .. .. .. .. | ३५-३६ | २२ |
| उपासनार्थं पृथक्त्वेनोपास्यस्य ध्यानम्, ... .. | ३७ | २३ |
| सत्यविद्याया एकत्वप्रतिपादनम्, .. .. .. | ३८ | २४ |
| दहराकाशहार्दाकाशयोरुपसंहर्त्तव्यत्वम्, .. .. | ३९ | २५ |
| उपासकस्य भोजने प्राणाहुतिलोपापत्तिः, .. .. | ४०-४१ | २६ |
| उद्गीथकर्माङ्गीभूतदेवतोपासनाया अनियतत्वं, .. | ४२ | २७ |
| संवर्गविद्यायामाधिदैववाय्वध्यात्मप्राणयोरनुचिन्तनस्य पृथक्त्वम्, .. .. .. .. .. .. .. | ४३ | २८ |
| मनश्चिदादीनां स्वतन्त्रविद्यात्वस्वीकारः, .. .. | ४४-५२ | २९ |
| भौतिकस्यात्मत्वनिराकरणपूर्वकं तदन्यस्यात्मत्वप्रतिपादनम्, .. .. ... .. .. .. .. | ५३-५४ | ३० |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| ऐतरेय्यलौकिकोपासनायां पृथिव्यादिदृष्टेः कौषीतक्यामपि समानत्वं, .. .. .. .. .. | ५५-५६ | ३१ |
| विराड्रूपवैश्वानरस्य समस्तस्यैव ध्यातव्यत्वं न तदंशस्येति | ५७ | ३२ |
| अनुष्ठातव्य-शाण्डिल्यदहरादिविद्यानां वेद्यब्रह्माभिन्नत्वेन भिन्नत्वं,.. .. .. .. .. .. .. | ५८ | ३३ |
| आत्मनः सगुणोपासनायां एकस्य द्वयोर्बहूनां वा उपासनानां वैकल्पिकनियमकथनं, ... .. .. .. | ५९ | ३४ |
| विकल्पेन समुच्चयेन वा प्रतीकोपासनाया ऐच्छिकत्वं, | ६० | ३५ |
| विकल्पसमुच्चययोर्याथाकाम्यं, .. .. .. .. | ६१-६६ | ३६ |


## उक्ताध्यायस्य चतुर्थपादे।


| | | |
|---|---|---|
| आत्मज्ञानस्य स्वतन्त्रत्वं न कर्मार्थत्वं, .. .. .. | १-१७ | १ |
| ऊर्द्ध्वरेतोरूपाश्रमाणामस्तित्वसंस्थापनं, ) १ वर्गकं<br>लोककामिनामाश्रमिणां ब्रह्मनिष्ठाकर्तृत्वं, ) २ वर्गकं | १८-२० | २ |
| उद्गीथावयवस्योङ्कारस्य ध्येयत्वं, .. .. .. .. | २१-२२ | ३ |
| औपनिषदाख्यानानां विद्यास्तावकत्वं, .. .. .. | २३-२४ | ४ |
| आत्मबोधस्य कर्मानपेक्षत्वम्, .. ... .. .. | २५ | ५ |
| विद्यायाः स्वोत्पत्तौ कर्मसापेक्षत्वम्, .. .. .. | २६-२७ | ६ |
| आपदि सर्वान्नाभ्यनुज्ञानं .. .. .. .. .. | २८-३१ | ७ |
| विद्यार्थिनामाश्रमधर्मार्थाञ्च यज्ञादीनां सहदनुष्ठानं, | ३२-३५ | ८ |
| अनाश्रमिणो ज्ञानसम्भावनम्, .. .. .. .. | ३६-३९ | ९ |
| आश्रमिणामवरोहाभावनिरूपणम्, .. .. .. | ४० | १० |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| भ्रष्टोर्द्धरेतसः प्रायश्चित्तसद्भावः, .. .. .. .. | ४१ ४२ | ११ |
| भ्रष्टोर्द्धरेतसः प्रायश्चित्तस्य आमुष्मिकशुद्धिजनकत्वं तादृशशुद्धिमतो व्यवहारानर्हत्वञ्च, .. .. .. | ४३ | १२ |
| उपासनस्य ऋत्विक्कर्मत्वम्, .. .. .. .. | ४४-४६ | १३ |
| मौनस्य विधेयत्वम्, .. .. .. .. .. .. | ४७-४९ | १४ |
| बाल्यस्य भावशुद्धित्वं न वयःकामचारोभयत्वम्, .. | ५० | १५ |
| इह वा जन्मान्तरे वा ज्ञानोत्पत्तिरिति ज्ञानोत्पत्तेः पाक्षिकत्वम्, .. .. .. .. .. .. | ५१ | १६ |
| सालोक्यादिमुक्तीनां अन्यत्वेन सातिशयत्वं निर्वाणमुक्तेश्च निरतिशयत्वम्, .. .. .. .. .. | ५२ | १७ |

इति तृतीयाध्यायस्य समाप्तं । ※ ।

## फलाख्यचतुर्थपादस्य प्रथमपादे।


| प्रतिपाद्यविषयाः। | सू॰ | अधि॰ |
|---|---|---|
| श्रवणादीनामावर्तनीयत्वम्, .. .. .. .. | १-२ | १ |
| आत्मा जीवेन स्वात्मतया ब्रह्मणो ग्राह्यत्वम्, .. .. | ३ | २ |
| प्रतीकेऽहन्दृष्ट्यभावः,.. .. .. .. .. .. | ४ | ३ |
| [illegible] प्रतीके ब्रह्मधियः कर्तव्यत्वम्, .. .. .. | ५ | ४ |
| कर्माङ्गेष्वादित्यादिदृष्टीनां कर्तव्यत्वम्, .. .. .. | ६ | ५ |
| उपासनायामासनस्य नियतत्वम्,.. .. .. .. | ७-१० | ६ |
| ध्यानसाधनस्यैकाग्र्यस्य यथासम्भवेन दिग्देशकालानामनियमः, .. .. .. .. .. ... .. | ११ | ७ |
| उपासनानामामरणमावृत्तिः, .. .. .. .. | १२ | ८ |
| ज्ञानिनः पापलेपाभावः, .. .. .. .. .. | १३ | ९ |
| ज्ञानिनः पुण्यलेपाभावः, .. .. .. .. .. | १४ | १० |
| सञ्चितयोरिवारब्धयोः पुण्यपापयोर्ज्ञानोदयसमये विनाशाभावः,.. .. .. .. ... ... .. | १५ | ११ |
| अग्निहोत्रादिनित्यकर्मणो विद्योपयोग्यंशस्याविनाशः, | १६-१७ | १२ |
| सोपासनस्य निरुपासनस्य च नित्यकर्मणः तारतम्येन विद्यासाधनत्वम्,.. .. .. .. .. | १८ | १३ |
| अधिकारिणां मुक्तिसद्भावः,.. .. .. .. .. | १९ | १४ |


## उत्क्रान्त्यध्यायस्य द्वितीयपादे।


| | | |
|---|---|---|
| वागादीनां मनसि वृत्तिप्रविलयो न स्वरूपेण,.. .. | १-२ | १ |
| मनसः प्राणे वृत्त्या प्रविलयः, .. .. .. .. | ३ | २ |

| प्रतिपाद्यविषयाः । | सू॰ | पृ॰ |
|---|---|---|
| प्राणस्य जीवे तस्यान्तरं पुनर्भूतेषु लयः, .. .. .. | ४-६ | ३ |
| ज्ञान्यज्ञानिनोरुत्क्रान्तेरपि साम्यं, .. .. .. | ७ | ४ |
| तेजःप्रभृतीनां भूतानां परमात्मनि सूक्ष्मो लयः, .. | ८-११ | ५ |
| देहादेव प्राणोत्क्रान्तेर्निषेधः, .. .. .. .. | १२-१४ | ६ |
| तत्त्वज्ञानिनो वागादीनां परमात्मनि लयः, .. .. | १५ | ७ |
| तत्त्वविदो वागादीनां निःशेषेण परमात्मनि लयः .. | १६ | ८ |
| उपासकस्योत्क्रान्तेर्विशेषवत्त्वं, .. .. .. .. | १७ | ९ |
| निशायामपि मृतानां रश्मिप्राप्तिः, .. .. .. | १८-१९ | १० |
| दक्षिणायनमृतस्योपासकस्य ज्ञानफलप्राप्तिः, .. | २०-२१ | ११ |


## उक्ताध्यायस्य तृतीयपादे ।


| | | |
|---|---|---|
| अर्चिरादिकस्य ब्रह्मलोकमार्गस्यैकत्वम्, .. .. .. | १ | १ |
| संवत्सरादित्ययोर्मध्ये देवलोकवायुलोकौ सन्निवेशयितव्यौ, ... .. .. .. .. .. .. .. | २ | २ |
| वरुणादीनां सन्निवेशादर्चिरादिमार्गस्य व्यवस्थापितत्वं, | ३ | ३ |
| अर्चिरादीनामातिवाहिकत्वं, ... .. .. .. | ४-६ | ४ |
| उत्तरमार्गेण कार्यब्रह्मगमनं, .. .. ... .. | ७-१४ | ५ |
| प्रतीकोपासकानां ब्रह्मलोकाऽप्रापणं, .. .. .. | १५-१६ | ६ |


## उक्ताध्यायस्य चतुर्थपादे ।


| | | |
|---|---|---|
| मुक्तस्वरूपस्य वस्तुनः पुरातनत्वं, ... .. .. .. | १-३ | १ |
| मुक्तस्य ब्रह्मणोऽभिन्नत्वं, .. .. .. .. .. | ४ | २ |

| प्रतिपाद्यविषयाः। | सू० | अधि० |
|---|---|---|
| मुक्तस्य ब्रह्मभूतस्य ब्रह्मणो युगपत् सविशेषत्वनिर्विशेषत्वे, | ५-७ | ३ |
| अर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तस्योपासकस्य भोग्यवस्तूनां सृष्टौ मानससङ्कल्पस्यैव हेतुत्वं, .. .. | ८-९ | ४ |
| एकस्यापि पुरुषस्य देहभावाभावयोरविरुद्धत्वं, .. | १०-१४ | ५ |
| सर्वेषां देहानां सात्मकत्वम्, .. .. .. .. | १५-१६ | ६ |
| ब्रह्मलोकगतानामुपासकानां जगत्सृष्टौ स्वातन्त्र्याभावेऽपि भोगमोक्षयोस्तेषां स्वातन्त्र्यसिद्धिः, .. .. | १७-२२ | ७ |


इति चतुर्थाध्यायस्य समाप्तम् ॥



